अथान्यदा मालवमण्डलावने-
विभूषणे मण्डपदुर्गनामनि ।
पुरे स पृथ्वीधरसाधुमार्हतं
प्राबूबुधद्धर्ममुदारधीर्गुरुः ॥ ७७ ॥
त्रिकालवेत्ता भगवान् स पञ्चम-
व्रतेऽपि लक्षा द्रविणस्य मुत्कलाः।
अनाढ्यमप्येतमचीकरत्प्रभुः
प्रपन्नसम्यक्त्वचतुस्त्रिकव्रतम् ॥ ७८ ॥
[redacted] च क्रमान्मालवमण्डलेशितुः
प्रजाभिरर्च्यः सचिवत्वमाश्रितः ।
बभूव ऋद्ध्या धनदोपमो हि किं
न ज्ञानिनां भाग्यवतां च गोचरे ॥७९॥
भुवं स चैत्यैर्हृदयानि सद्गुणै-
र्मनीषिणां व्याप च कीर्त्तिभिर्दिशः ।
धनैश्च कोशान् प्रशशास च प्रभू-
नपि क्षमाया विदितोरुषड्गुणः ॥८०॥
स षट्सहस्र्याधिकजीर्णटङ्का-

युतत्रयस्याय मुदा व्ययेन ।
श्रीधर्मघोषे स्वगुरौ समेते
ऽन्यदा प्रवेशोत्सवमाततान ॥ ८१ ॥
प्रसेदुषाऽसौ गुरुणाऽर्पितक्रमः
क्रमाऽप्रबुद्धद्रविणव्ययास्पदः ।
अचीकरच्चैत्यचतुष्टयाधिका-
शीतिं स्फुरच्छारदवारिदप्रभाम् ॥ ८२ ॥
अनुचरैस्तैः किल चिन्तनातिगै-
रुदारधीरैश्चरितैरसस्मरत् ।
चिराद्यतीतं हरिषेणचक्रिणं
ससम्प्रति चापि कुमारभूपतिम् ॥८३॥
मौक्तिकश्रीसमायुक्तजिननायकमण्डिताः ।
हारा इव विहारास्ते भान्ति भूमामिनी हृदि॥८४॥
कोटाकोटिरिति प्रसिद्धमहिमा शान्तेश्च शत्रुञ्जये
श्रीपृथ्वीधरसंज्ञया सुरगिरौ श्रीमण्डपाद्रौ तथा ।
प्रासादा बहवः परेऽपि नगरग्रामादिषु प्रोन्नता
भ्राजन्ते भुवि तस्य मुक्तिवलभीनिःश्रेणिदण्डा इवा॥८५॥

अत्र श्रीपृथ्वीधरसाधुकारितप्रासादस्थानसंख्याप्रभुनायकजिननामादि वाच्यम्। पूज्यगुरुश्रीसोमतिलकसूरिपादैः कृतं स्तोत्रमवतार्य पठनीयम् ॥

। तच्चेदम् ।

श्रीपृथ्वीधरसाधुना सुविधिना दीनादिपूद्दानिना
भक्तश्रीजयसिंहभूमिपतिना स्वौचित्यसत्यापिना ।
अर्हद्भक्तिपुषा गुरुक्रमजुषा मिथ्यामनीषामुषा
सच्छीलादिपवित्रितात्मजनुषा प्रायःप्रणश्यद्रुषा ॥८६॥
नैकाः पौषधशालिकाः सुविपुला निर्मापयित्रा सता
मन्त्रस्तोत्रविदीर्णलिङ्गविवृतश्रीपार्श्वपूजाभुजा ।
विद्युन्मालिसुपर्वनिर्मितलसद्देवाधिदेवाहृय
ख्यातज्ञाततनूरुहप्रतिकृतिरपूज्यैर्लसत्पर्यासृजा ॥८७॥
त्रिःकाले जिनराजपूजनविधिं नित्यं द्विरावश्यकं
साधी धार्मिकमात्रकेऽपि महतीं भक्तिं विरक्तिं भवे ।
तन्वानेन सुपर्वपौषधवता साधर्मिकाणां सदा
वैयावृत्त्यविधायिना विदधता वात्सल्यमुच्चैर्मुदा ॥८८॥
श्रीमत्संप्रतिपार्थिवस्य चरितं श्रीमत्कुमारक्ष्मा-

पालस्याप्यथ वस्तुपालसचिवापीदास्य पुण्याम्बुधेः।
स्फारं स्फारमुदारसंमदसुधासिन्धूर्मिपूर्णमज्जता
श्रेयःकाननसेचनप्रगुरुप्रावृट् भवाम्भोमुचा॥८९॥
सम्यङ्न्यायसमर्जितोर्जितधनैः सुस्थानसंस्थापितै-
र्यैर्य यत्र गिरौ तथा पुरवरे ग्रामेऽथवा यत्र ये।
प्रासादानयनप्रसादजनका निर्मापिताः शर्मदा-
स्तेषु श्रीजिननायकानभिधया सार्द्धं स्तुवे श्रद्धया॥९०॥
पञ्चभिः कुलकम्।
श्रीमद्विक्रमतस्त्रयोदशशतेष्वब्देष्वतीतेष्वथो
विंशत्याप्यधिकेषु मण्डपगिरौ शत्रुञ्जयभ्रातरि।
श्रीमानादिजिनः १ शिवाङ्गजजिनः श्रीउज्जयन्तायिते
निम्बस्थूरनगेऽ२थ तच्चलभुवि श्रीपार्श्वनाथः ३ श्रिये९१
जीयादुज्जयिनीपुरे फणिशिराः श्रीविक्रमाख्ये पुरे
श्रीमान्नेमिजिनो ५ जिनौ मुकुटिकापुर्यां च पार्श्वादिमौ ७
मल्लिः शल्यहरोऽस्तु विन्धनपुरे ८ पार्श्वस्तथाऽऽशापुरे ९
नाभेयो वत धारकीपुरवरे १० शान्तिर्जिनोऽर्यापुरे ११।९२
श्रीधारानगरेऽथ वर्द्धनपुरेऽश्रीनेमिनाथः पृथक् १२,१३

अत्र श्रीपृथ्वीधरसाधुकारितप्रासादस्थानसंख्यामूल-नायकजिननामादि वाच्यम्। पूज्यगुरुश्रीसोमतिलकसूरिपादैः कृतं स्तोत्रमवतार्य पठनीयम् ॥

। तच्चेदम् ।

श्रीपृथ्वीधरसाधुना सुविधिना दीनादिपूद्दानिना
भक्तश्रीजयसिंहभूमिपतिना स्वौचित्यसत्यापिना ।
अर्हत्कृतिपुषा गुरुक्रमजुषा मिथ्यामनीषामुषा
सप्तक्षेत्रदिपविचित्रितात्मजनुषा प्रायःप्रणदयद्रुषा ॥८६॥
नैकाः पौषधशालिकाः सुविपुला निर्मापयित्रा सता
मन्त्रस्तोत्रविदीर्णलिङ्गविसृतश्रीपार्श्वपूजायुजा ।
विद्युन्मालिसुपर्वनिर्मितलसद्देवाधिदेवाद्वय
ध्यानज्ञाननमूर्ध्नमनिकृतिनिरूढ्वंलगणयांग्रजा ॥८७॥
त्रिःकाले जिनराजपूजनविधिं नित्यं द्विरावश्यकं
भावी धार्मिकसार्थकेऽपि महतीं भक्तिं विरचिन्मे ।
तन्वानेन गुरुगीःश्रवणता साधर्मिकाणां सदा
वैरकृत्यविधायिना शिवधना यात्मान्यमुधंगुंता॥८८॥
श्रीमन्मन्दिरपार्श्वनाथस्य चरितं श्रीसनत्कुमारभूपा-

श्रीअश्वसेनात्मजः ४१
श्रीदर्भावतिकापुरेऽष्टमजिनो
४२ नागहृदे श्रीनमिः ४३ ॥१६ ॥
ीमल्लिर्धवलक्कनामनगरे ४४ श्रीजीर्णदुर्गान्तरे ४५
श्रीसोमेश्वरपत्तने ■ फणभृल्लक्ष्मा४६जिनो नन्दताद्
विंशः शङ्खपुरे जिनः४७ स चरमः सौवर्चके ४८वामन-
स्थल्यां नेमिजिनः४९शशिप्रभजिनो नासिक्यनाम्न्यां
पुरि ५० ॥ १७ ॥
श्रीसोपारपुरेऽ५१थ रूणनगरे-
ऽ५२थो रुङ्कलेऽ५३थ प्रति-
ष्ठाने पार्श्वजिनः५४शिवात्मजजिनः
श्रीसेतुबन्धे ५५ श्रिये ।
श्रीवीरो वटपद्र ५६ नागलपुरे ५७
ष्टक्वारिकायां ५८ तथा
श्रीजालन्धर५९देवपालपुरयोः६०
श्रीदेवपूर्वे गिरौ ६१ ॥१८॥
चारूप्ये मृगलाञ्छनोजिनपति६२र्नेमिःश्रिये द्रोणले६३

श्रीनाभेयजिनोऽथ चन्द्रकपुरीस्थाने१४स जीरापुरे१५
श्रीपार्श्वौ जलपद्र१६ दाहडपुरस्थानद्वये १७ संपदम्
देयाद्वीरजिनश्च हंसलपुरे१८मान्धातृमूलेऽजितः१९।१
आदीशो घनमातृकाभिधपुरे२० श्रीमङ्गलाख्ये पुरे २१
तुर्यस्तीर्थकरोऽथ चिक्खलपुरे श्रीपार्श्वनाथः श्रिये २२
श्रीवीरो जयसिंहसंज्ञितपुरे२३नेमिस्तु सिंहानके २४
श्रीवामेयजिनः सलक्षणपुरे२५ पार्श्वस्तथैन्द्रीपुरे२६।९
शान्त्यै शान्तिजिनोस्तु ताहृणपुरे२७रो हस्तनाचेपुरे२
श्रीपार्श्वः करहेटके२९ नलपुरे३० दुर्गे च नेमीश्वरः३१
श्रीवीरोऽथ विहारके३२स च पुनः श्रीलम्बकर्णीपुरे३३
खण्डोहे किल कुन्थुनाथ३४ऋषभःश्रीचित्रकूटाचले३५
॥ ९५ ॥

आद्यः पर्णविहारनामनि पुरे
-३६-पार्श्वश्च चन्द्रानके ३७-
वङ्कयामादिजिनो३८थ नीलकपुरे
जीयात् द्वितीयो जिनः ३९।
...धो ना...पुरे ४०ऽय मध्यकपुरे

नित्यं त्रिर्जिनपूजनं गुरुनतिः साधर्मिकाभ्यर्चनं
दीनाद्युद्धरणं सुशास्त्रपठनं पर्वस्वथो पौषधः।
कृत्यानीति गुरूपदेशवशगः स द्विः प्रतिक्रान्तिकृत्
भूपालार्पितमालवावनमहाचिन्तोप्यहो निर्ममे ॥११॥

अनुत्तरोदारसमग्रसद्गुणः
स षड्विधावश्यकतत्परः सदा।
नृरत्नमर्हद्गुरुभक्तिभाग्मत-
प्रभावकोऽलङ्करणं भुवोऽभवत् ॥ १२ ॥

प्रबोधकोऽस्य गुरुः सचाऽन्यदा
दुष्टाङ्गनाभिर्वटकान् सकार्मणान्।
विहारितान् साधुजनैरतत्यजत्
प्रगे शिलाखण्डमयाश्च तेऽभवन् ॥ १३॥

ततोऽभिमन्त्र्यार्पितपट्टकासना-
स्ताः स्तम्भयित्वा दययाऽमुचत्तताः।
तथैव विद्यापुरकेशगुल्मकृत्
स्त्रियोऽथ संघार्थनया मुमोच सः ॥ १४ ॥

क्वचित् पुरे द्यानिशि शाकिनीनिया

पृथ्वीधरं प्राप्य मुदं दधुस्ते ॥ ६ ॥
कैवल्यदानप्रतिभूजिनोक्त-
समग्रशास्त्रावलिलेखनेन ।
अवीभरत्सप्त स सारकोशान्
सरस्वतीकेलिगृहानिवोच्चैः ॥ ७ ॥
श्रीस्तम्भतीर्थे निवसन् प्रभावको
वेषं स भीमः प्रजिघाय सङ्घराट् ।
पृथ्वीधरस्याप्युचितं समर्चयन्
शीलप्रपञ्चौ निखिलान् सधर्मकान् ॥८॥
युतः सुपत्न्या प्रथमिन्यभिख्यया
तथैव साधर्मिकतां विभावयन् ।
द्वात्रिंशवर्षोऽपि भटोजितस्मरः
प्रपद्य शीलं तमथो सपर्ययाद् ॥ ९ ॥
प्रियापि साऽस्य प्रथमिन्यभिख्या
ख्याता सतीषु प्रथमाचरेखा ।
कदापि या क्वापि न पुण्यकृत्ये-
ष्वहीयताऽस्माद्गुरुदेवभक्ता ॥ १० ॥

स्तन्त्रैर्मन्त्रैरमात्रैः समजनि विकटैर्श्चेटकैर्श्चोत्कटो यः
आकर्षाघाटचर्ष्यादिभिरपि न तदा शक्तिभिः कोऽपि
योगी, कर्मांगुल्यांतिलोको गिरिमपि चलयेच्छोप-
यंहारिधं वा ॥ १९ ॥

निषिद्धसाधुस्थितिकोज्जयिन्यां
श्चमूपकौलादिविकुर्वणाद्यैः ।
तं भापयन्तं श्रमुनीन् नियम्य
प्रपीड्य मन्त्रैरमुचत् स नम्रम् ॥ २० ॥

॥ युग्मम् । संबंधोऽयम् । व्यासावतारस्त्वेवम् ॥

यत्संहतालमालाविदलनकुशलः सिद्धक्षोण्यौङ्घवृन्द-
स्तन्त्रैर्मन्त्रैरमात्रैः समजनि विकटैर्श्चेटकैर्श्चोत्कटोऽय।
योगीकोप्युज्जयिन्यां नृपसचिवमुखैःपूजितः सर्वलोकै-
र्नानाशिष्यैः परीतोदधदणिमवशित्वे शताद्यांश्च
शक्तीः ॥ २१ ॥

स्वर्णाद्रिं शिरसा भिनद्मि निखिलानाकर्षयामि ग्रहान्
फूत्कृत्यादिवमुत्क्षिपामि च गिरीन् संशोषयाम्यम्बुधीन्
त्रैलोक्यं स्ववशीकरोमि विदधे स्वर्भूर्भुवोव्यत्ययं

ऽभिमन्त्र्य दीयेत ततोऽमुनेऽन्यदा ।
गुरुस्तदुत्पाटितपट्टिवीक्षणे
संस्तम्भ्य वाचा वशिना मुमोच ताः ॥१५॥
श्रीशारदालब्धवरोनिदेशकया-
प्यष्टभिः स कृत्वा यमकैरलङ्कृताः ।
स्तुतीर्जिनानां शमदज्ञौपधी-
रयूयुघदुर्जरराजमन्त्रिणम् ॥ १६ ॥
सोमेशपत्तनगतः स्मरणानुभावा-
त्सोऽध्यक्षतागमितजीर्णकपर्दिराजम् ।
मिथ्यात्वतो भवगमी चिरमेप माभू-
रेवं प्रबोध्य विदधे श्रितजैनबिम्बम् ॥ १७ ॥
शिष्यार्थनाविहितमन्त्रनुतिप्रभावा-
द्रत्नाकरोप्यकृत मण्युपदां तरङ्गैः ।
स्थानेऽस्य तचदतिथेः पुरुषोत्तमस्य
गम्भीरताभिभवनाल्लुठतः पदाग्रे ॥१८॥
। अथच ।
वल्गद्वेतालमालाविदलनकुशलः सिद्धक्षोटीङ्गवृन्द-

पलाय्य तद्गच्छत मर्षयाम्यहं
सरङ्ककाणामपराधमेककम् ।
भ्रूक्षेपमात्रादपि कम्पितामरो-
ऽन्यथा पतिष्यथ मे रुषानले ॥ २७

जगुर्मुनीन्द्राः प्रभवन्ति दुर्मते
सर्वज्ञपुत्रेषु न ते विभीषिकाः ।
मृगेषु सिंहस्य यथा हि विक्रमः
स्फुरेत्तथा नो शरभार्भकेष्वपि ॥ २८ ॥

न योगिराजन्यकुदर्शनिव्रजैः
समानतां बिभ्रति सूनवोऽर्हतः ।
करैरपि ध्वान्तरिपोर्विलुप्यते
न तारकाणामुदितैः किमु प्रभा ॥ २९ ॥

प्रभुः किमद्यापि न नः श्रुतोजयी
गुरुर्भवदर्पतमोदिवाकरः ।
यमत्र विद्या निखिलाः समं श्रिताः
सरित्पतिं सिन्धुगणा इवाधुना ॥ ३० ॥

गतं गजेन्द्रस्य यथा न जम्बुके-

देवेन्द्रैःसह लोठयामि पदयोर्ब्रह्मेशनारायणान् ॥२२॥
भोभोदर्शनिनः समस्तिपटुता कस्यापि चेत्तन्मया
सार्द्धं वादरणं करोत्वभिमतं कृत्वा पणं सोऽधुना।
नोचेत्त्यक्तमदा मदीयमखिलाः सेवध्वमंह्रिद्वयं
दूरं यात पलाय्य वाऽपि सकलान्नोचेद्विलाम्येष वः२३

इति प्रतिज्ञां प्रवदन्मदात्तदा
जगत्त्रयेऽप्यप्रतिमल्लतां विदन् ॥
विप्रासितान्याखिलदर्शनिव्रजो
नैवांज्जयिन्यां स ससाह संयतान् ॥२४॥
श्रीधर्मघोषः प्रभुरन्यदाऽगमत्
स तत्र धात्र्यां विहरन्महर्षियुक् ।
अमुष्य शिष्यांश्च स वीक्ष्य वर्त्मनि
क्रुधाकुधीर्दष्टरदच्छदोऽवदत् ॥ २५ ॥
इहागताः किं नु पुरे सिताम्बरा
विहाय मूढा विपुलं धरातलम् ।
सुसूर्पुंगोधानुनिपादपाटकं
न वीक्षितश्चेद्दहं श्रुतोऽपि न ॥ २६ ॥

पलाय्य तद्गच्छत मर्षयाम्यहं
सरड्डककाणामपराधमेककम्।
भ्रूक्षेपमात्रादपि कम्पितामरो-
ऽन्यथा पतिष्यथ मे कृपानले॥ २७॥
जगुर्मुनीन्द्राः प्रभवन्ति दुर्मते
सर्वज्ञपुत्रेषु न ते विभीषिकाः।
मृगेषु सिंहस्य यथा हि विक्रमः
स्फुरेत्तथा नो शरभार्भकेष्वपि॥ २८॥
न योगिराजन्यकुदर्शनिव्रजैः
समानतां बिभ्रति सूनवोऽर्हतः।
करैरपि ध्वान्तरिपोर्विलुप्यते
न तारकाणामुदितैः किमु प्रभा॥ २९॥
प्रभुः किमद्यापि न नः श्रुतोजयी
गुरुर्भवदर्पतमोदिवाकरः।
यमेव विद्या निखिलाः समं श्रिताः
सरित्पतिं सिन्धुगणा इवाधुना॥ ३०॥
गतं गजेन्द्रस्य यथा न जम्बुकै-

नवा मृगैः शौर्यविजृम्भितं हरेः ।
नभःप्लुतिं नो मशकैर्गरुत्मतो
रवेर्न खद्योतकैर्हितां भरम् ॥ ३१ ॥
नगैर्न गाङ्गेयगिरेर्यथोच्चतां
जलाशयैर्नो जलधेरगाधताम् ।
द्रुमैः प्रभावं न च कल्पशाखिनो
न दुर्गतैः श्रीस्फुरितं च चक्रिणः ॥३२॥
यथा न भूतैर्ललितं सुरेशितु-
र्न तीर्थिकैस्तीर्थकृतोऽर्थदेशनाम् ।
समग्रविद्याविदुरैर्न नो गुरो-
स्तथाऽनुकर्तुं चरितं प्रगल्भ्यते ॥ ३३ ॥
ततो मुधा गर्जसि गर्वपर्वतो
मन्यामहे त्वां न तृणाय दुर्मते ।
अस्मद्गुरोर्मन्त्रसमीरणोद्धुतो
न तूलकल्पः स्थिरतां प्रधास्यसि ॥३४॥
मृगस्य सिंहस्य मगस्य भानुमा-
नसिर्मृणालस्य तृणस्य चा ऽनलः ।

अहेर्गरुत्मानिव लीलयाऽप्यलं
तवापहर्तुं मदजीवितं गुरुः ३५ ॥
निशम्य योगीति रुषा स लब्धा
जान्वायतश्मश्रुलदास्यभीष्मम् ।
विधाय रूपं विकृतं जिघत्सु-
रिवाभ्यधावच्चलयन् भुवं तान् ॥३६॥
मुमुक्षवस्तद्रदपातसूचिनीं
कफोणिमुद्भूर्य पलाय्य च द्रुतम् ।
सकम्पगात्रास्तरलेक्षणा भया-
द्गुरुं वसत्यां शरणं प्रपेदिरे ॥ ३७ ॥
मा भैष्ट मा भैष्ट कुतो नु वो भयं
मयि प्रभौ त्रातरि हे विनेयकाः ।
इतीरिता श्रीगुरुणाथ संभ्रमा-
दाश्वस्य वृत्तं मुनयोऽपि तज्जगुः ॥३८॥
यावत्तदाकर्ण्य करोति रोषतो
भ्रुवं ललाटप्रणयोद्धुतां गुरुः ।
तावत्प्रदोषे विचकार दूरगो-

निजगुरुमवदन् पाहिपाहीति शिष्याः॥४१॥
त्रातायं त्रोसि विश्व-
प्रकटमहिमभृत्रैष्ट मा भैष्ट मा भो
आश्वास्यैवं विनेयान्
गुरुरपि विगतक्षोभशङ्कः सदापि ।
यावद्ध्यानावलम्बी जपति
जयकरं सिद्धमन्त्रं स तावत्
सर्प्पाद्याः क्वापि जग्मुः
प्रमुदितमनसः साधवश्चाप्यभूवन् ॥४२॥
योगी सोप्युग्रबन्धै-
रविपयिविपर्यैर्हा म्रियेरे म्रियेरे
शिप्या यद्याखिलाङ्गः
कुरुतकुरुत भोः काम्बनाऽऽशूपचारान् ।
आस्तावद् यत्नसिद्धा
अपिहि विफलतां भेजिरे चेटकाद्याः
सर्वं मन्त्राश्च दैवं
धिगहह किमभूर्द्दीरियं मे ऽधुनाऽधैः ॥ ४३॥

क्रन्दान्नित्युग्रकष्टः
सकलपुरजनैर्दृश्यमानो विमानो
धावद्भिर्व्याकुलैः स्वै-
र्निखिलपरिजनैश्चापि हाहारवाढ्यैः ।
आकृष्टो जैनमन्त्रैः
स्मृतिमपि गमितैश्चेटकाद्यैरशक्य-
स्त्रातुं व्योम्ना समागा
द्गुरुपदकमलोपान्तमानम्रमौलिः ॥ ४४ ॥
उवाच योगी भगवन् दयानिधे
ऽपराधमेकं मम मर्षयाधुना ।
विमुञ्च मामेष पतामि पादयो-
र्नवो विरुद्धं विदधे ह्यतः परम् ॥४५॥
जगुर्जनाश्चापि न धर्तुमर्हति
प्रभो प्रकोपं प्रणते दयास्पदे ।
व्यधादथ स्वक्रमरेणुना गुरुः
शमीं स्वभावस्थमिमं लसद्दयः ॥ ४६ ॥
सं शङ्कर: सर्वजनेष्टकर्त्ता

ब्रह्मा त्वमेवाखिलब्रह्मनिष्ठः।
त्वमेव सत्यं पुरुषोत्तमोऽसि
त्वमेव बुद्धः सकलार्थवेदिन् ॥ ४७ ॥
अबुद्धतत्त्वस्य मुधाऽभिमानिनो
ममासि बुद्धः सुचिराज्जगद्गुरुः।
त्वदीयपादाब्जरजोऽणुनाऽपि चे-
त्तुलां लभे तर्हि भजे कृतार्थताम् ॥४८॥
समग्रविद्याविभवात्मकस्य ते
पुरोऽणवत्स्वेप सुसिद्धिभागपि।
विभर्ति यस्माल्लघिमानमुच्चकैः
पुरः सुमेरोर्निखिलोऽपि भूधरः॥४९॥
इति स्वनिन्दामुखरः सविस्मयः
सुभक्तिभाक् सर्वजनस्य पश्यतः।
स्तुवन्मुदाऽऽनम्य गुरुं सहानुगै-
र्जगाम विद्वान् स्वपदं स योगिराट्॥५०॥
अहो जयत्याऽऽर्हतशासनं प्रभु-
र्गुरुः स यस्येदृशशक्तिमानयम्।

ज्ञानज्वरच्छेदमहौषधीन ॥ ५५ ॥

यः स्वर्गमापत्तुरगेषुविश्व

मितेऽ१३५७ब्दके विक्रमतः क्षितीन्द्रात् ।

श्रीधर्मघोषः कृतपुण्यपोषः

स रातु सङ्घाय विभुः सुखानि ॥ ५६ ॥

तदीयपट्टाम्बरभासनोद्यतः

सोमप्रभः सूरिवरो ४८ बभूव सः ।

यो दीयमानां गुरुणाऽपि न ग्रही-

च्चारित्रशुध्यै किल मन्त्रपुस्तिकाम्॥५७॥

मोदन्ते कृपणमतयः क्लेशभाजो धनाढ्यैः

ालैर्वादिद्विपमदहरैश्चाप्यधीतैः कियद्भिः ।

ालाभिर्वा लघिमवशिताकर्षमुख्यर्द्धिभिर्ये

वैं साम्यामृतरससुजस्ते ऽनुकम्प्या हि तस्या॥५८॥

स्वान् सच्चरणश्रिया विशदया विश्वोत्तरप्रोल्लस-

ातुर्वैंधरमाविलासनिलयः श्रीचित्रकूटाचले ।

लाऽऽशु द्विजराजमण्डलमसौ छत्रप्रभं गोभरैः

र्दर्पमजीजनज्जिनमतानन्तप्रकाशोदयम् ॥५९॥

भक्तेष्वपि श्रावकपुङ्गवेषु
ममत्वमुक्तेवलसंयमार्थी ।
शुद्धाम्बलाभाम्बुविराधनाभ्यां
सोऽमूमुचत् स्वैर्मरुकुङ्कुणेर्याम् ॥ ६४ ॥

यतिजीतकल्पयत्रा-
खिलादिजैनेन्द्रसंस्तुतिप्रमुखा ।
विपुलमतेस्तस्य कृति-
र्हरते हृदयानि विबुधानाम् ॥ ६५ ॥

दिग्विश्ववर्षे १३१० जननं कृपाणि-
विश्वे १३२१ व्रतं प्राप्य रदत्रिचन्द्रे १३३२।
पदप्रतिष्ठां च गुरुर्जगाम
त्रिसप्तविश्वे १३७३ च स देवधाम ॥६६॥

ददात्वसौ मञ्जुलमङ्गलालीं
जगत्पवित्रीकरणाभिधानः ।
श्रुतासु यद्धर्म्यकथास्वपीह
भवेत्सतां साम्यरसानुभूतिः ॥ ६७ ॥

चत्वारस्तस्य गुरोः

स बाणबाणत्रिकुवर्षे १३५५ माघे
जातः पदाभ्यामनुकूलखेटैः ।
नन्दाङ्गविश्वे १३६९ व्रतमाप्य भेजे
चन्द्राश्वविश्वे१३७३ऽपि पदप्रतिष्ठाम्॥७३॥
सूरीन्द्रसोमप्रभपट्टभास्करो
यालोप्यसौ प्राप्तपदप्रभोदयः ।
क्षमाभृतां मौलिनिघृष्टपादभृत्
विदिद्युते स्फारयशाः प्रतापवान् ॥ ७४ ॥
अयं निजैः सूरिगुणैरनुत्तरैः
सूरिर्न कैरप्युपमामशिश्रियत ।
येनोपमीयेत सरोऽम्बुराशिना
न चाम्बुराशिः सरसाम्बुऋद्धिभिः॥७५॥
अल्पायुष्प्रात्तसूरित्रितयस्यैकोप्यसावपाद्गच्छम् ।
रक्षयत्येकोऽपि वनं सिंहो न तु लक्षशोऽपि मृगाः॥७६
न कैर्गजः सङ्घपतिः प्रशस्यते
स जङ्घरालाव्यवहारिमण्डनः ।
यष्टङ्कमार्द्धायुतयामल २५००० व्यया-

दचीकरच्चत्पदमद्भुतोत्सवैः ॥ ७७ ॥
क्षोणीभूषणजङ्घरालनगरालङ्कारवीरालये
प्राप्ताचार्यपदस्य तस्य सुमहोभाग्यस्य दृष्ट्याप्यहो ।
भूतप्रेतकशाकिनीच्छलरिपूच्चाटस्फुरत्कार्मणा-
द्युत्थोपद्रवमण्डलानि निखिलान्याशु प्रणेशुर्नृणाम् ॥७८
नो दुष्टाः पशवः स्वभावरिपवः प्रायोमुमुषुर्नो खला-
स्तस्योत्कृष्टयशःप्रतापसुगुणा व्यापुश्च सर्वा दिशः ।
तच्चाभिर्जितका इवापरमहासूरीश्वराणां च ते
दूरं क्वापि पलायिता मुमुधिरे कैर्भिषधा नो पुनः॥७९॥
यद्वत्कीपरितर्ककर्कशमतिप्रोत्सर्पिदर्पोत्कर-
स्फूर्जद्दुर्दमवादिसंमदगदापस्मारविस्मारके ।
एतस्मिन्नवति प्रभौ जिनमतं तद्द्वेषिणः क्वाप्यगु-
र्दिग्भ्रौत्माक्ष्मातिप्रभावकभयः कष्टं जिजीषुः परम्॥८०॥
विश्वव्यापिनि तस्य विश्रुतयशःपद्माकरे, गर्वतः
कण्ठाद्धृत्यनदम्बुशीकरतुलामन्दोद्भवान्यगम् ।
नीराम्भोजनि तावदम्भानन्दं श्वेताश्वकाशादलं
सूर्याचन्द्रमसौ भगान्तुलनादौस्यामभागेहला॥८१॥

तस्याम्बिलश्वेतपटाधिपस्य
शक्नोति कः श्वेतपटान् प्रमातुम् ।
एयो यशःश्वेतपटो यदस्य
दिगङ्गनाङ्गाऽऽवरणं विपश्चे ॥ ८२ ॥

किं बहुना ।

ध्वस्ता यादिमदा हृतः कलिमलो मिथ्यात्वमुग्रं तम-
श्छिन्नं मण्डलमण्डलप्रसृमरं प्राप्तं नृपेभ्योऽर्चनम् ।
यस्तूना शासनभा युगोत्तमगुणैराऽऽप्ता तुला गौतमी-
स्तुपलब्धिगुणप्रभावचरितैः सूरिः समोऽन्योऽस्य न ८३
बृहत्क्षेत्रसमाससप्ततिशतस्थानादिशास्त्रैर्नवैः
पात्रैराऽऽगमवारिधेरतिगुरोः पूर्णैः स्वधीगाहितात् ।
उद्धृत्यार्थसुधारसान् सुमनसः संसारतापापहान्
सोऽपीप्यत् पुरुषोत्तमः स्वतिशयप्रीतिश्रिया संश्रितः ८४
शिष्यांस्त्रीन् समतास्थपत्तिजपदे प्राज्ञान् स तेष्वादिमः
ख्यातः श्रीगुरुचन्द्रशेखर इति त्रैवैद्यवारां निधिः ।
त्रैर्णोनोद किल चन्द्रशेखरमहो नाम्नाऽपि पारपर्दतं
यो ऽसौढा भुवने स्वकीर्तिपटलैर्निर्माय शौक्ल्याद्व-
यम् ॥ ८५ ॥

अभिमन्त्रितरजसा ऽपि हि
गृहहरिकादुर्द्धरश्च मृगराजः ।
दूरं नेशुर्यस्मात्
सपरिकारान्महिमवारिनिधेः ॥ ८६ ॥

न क्षीरं गोक्षीरं न मधु मधुरं किं तु विधुरं
मनः साक्षाद्द्राक्षा न हरति सुधा साऽपि हि मुधा ।
न सान्द्रा वा चान्द्रा न च मरुचयः साधुशुचयः
श्रुतार्थेयद्वाणी भवरिपुकृपाणी नवरसा ॥ ८७ ॥

वासिकभोज्यकथानकशत्रुञ्जयरैवतस्तुतिप्रमुखा ।
चित्राकृतिर्यदीया फणिकुलमोदप्रदा जयति ॥ ८८ ॥

अग्न्यश्वपक्षीन्दुमिताब्दजातः १३७३
शरेभविश्वे १३८५ यमितामवाप्य ।
द्विनन्दविश्वे १३९२ च पदप्रतिष्ठां
त्रिदोर्मनुव्या १४२३ ऽगम च यः सुरौकः ॥ ८९ ॥

शिष्याध्यापनकौशलं निपुणता सा सार्वदैव गिरां
माधुर्यं प्रशमादयो जनहितं चारित्रपरस्फुरत्।
विश्वान्यायदरेदनानिपुणता जैनं यशो विश्वनि-

यस्याभूत् सदृशो गुणैर्न स गुरुः सङ्घाय देयात्सुखम्९०

श्रीसोमतिलकसूरि-
स्तस्य गुरुस्तदनुचैकवर्षेण ।
जिनभुवने १४२४ स्वर्गमित-
स्तनोतु सङ्घाय कल्याणम् ॥ ९१ ॥

तस्य स्वर्गतिसमये
सुरकृतखोद्योतनादिमहिमानम् ।
वीक्ष्य जनाः प्रोचु-
रहो विमानमागाद्गुरोस्य ॥ ९२ ॥

पात्रावतीर्णदेवी
जगौ सुरेभ्यः श्रुतं मया मेरौ ।
सौधर्मेन्द्रसमाना
जज्ञुरिमे श्रीतपाचार्याः ॥ ९३ ॥

शिष्यो द्वितीयस्त्वभवत्तदीयः
श्रीमान् जयानन्दगुरुः स योऽभूत्
कलिद्विपःक्लृप्तजयाद्विधाया-
नन्दं सतां सार्थकनामधेयः ॥ ९४

जातोऽन्तरिक्षद्विपविश्ववत्सरे १३८०
   द्विनन्दवह्नीन्दुषु१३९२ यो ऽभवद्व्रती ।
लेहाभिषेधप्रवणे ऽग्रजन्मनि
   प्रबोधिते देवतया प्रभावकः ॥ १५ ॥
पदं श्रितः सोचारसूरिरष्टदो-
   मनुष्य१४२०मेयातिशयश्रियां निधिः ।
चकार रम्यं शकटालजन्मनो
   वृत्तं गमी यो कुसुमाब्धिगोषु१४४१यः॥१६॥
यद्देशनाशैवलिनीनिलीनाः
   प्रौज्झन् द्विजौघा अपि कल्मषपङ्कम् ।
तदेकलीना जगच्चित्तमीना-
   स्तया परं यद्धकगूचिमीनिम् ॥ १७ ॥
यद्दीर्घविद्याविभवादकीर्तिं
   शेषंग सर्वं प्रतिभाति विष्टपम् ।
दधाति यद्दुर्विचना शिखि पुरो
   महेन्द्रसूरेः सनगमपं जगत् ॥ १८ ॥
युगोत्तमाभो जगदुत्तमे गुणै-

यौं भारतीभारतसंयमश्रियोः।
आधारभूतः समभूत् प्रभावभू-
स्तनोतु सङ्घस्य स सातसन्ततिम् ॥९९॥
श्रीदेवसुन्दरसुगोत्तमसूरिराजाः ५०
शिष्या जगत्त्रयदृशो जयिनस्तृतीयाः ।
यैर्भास्वरैः स गणराट् पुरुषोत्तमोऽपि
भूलेशतामभृत सोमलसामसूरिः ॥ १००॥
पञ्चवाग्निविधुवत्सर १३९६ जाताः
प्राव्रजन् जलधिखाब्धिमहीषु १४००।
ये महेश्वरपुरे नखरत्ने १४२०
पत्तने च पदसम्पदमापुः ॥ १ ॥
येषां जगद्विस्मयमोदकारिणं
गजर्षिकृद्वो विदधे पदोत्सवम् ।
सौवर्णिकः सङ्घपतिर्नृपप्रभः
सिंहोऽर्हतो ज्ञानमहं नु वासवः ॥ २ ॥
अथ तेषामवदातैतिह्यप्रकटनं किञ्चित्क्रमात् ॥
बाल्ये ऽपि येषां किलमक्षिकाजुषां

सुलक्षणैः लक्षणवेदिनः पदौ ।
समीक्ष्य केचिद्विबुधा जगुः परां
चिरं भवित्रीं महनीयतामुवः ॥ ३ ॥

कोटीनाराह्वपुरे गणभृच्छ्रीसोमतिलकसूरिणाम् ।
गणभारोद्धरणपटुं पात्रं जिज्ञासमानानाम् ॥ ४ ॥

सुध्यानलीनमनसां
विशदगुणैर्भाविनो युगवराभाः ।
क्षुल्लत्वे ऽपि च कथिता
येऽम्बिकयानन्तभाग्ययुजः ॥ ५ ॥
॥ युग्मम् ॥

अभूत् त्रिशत्या वरयोगिनां श्रुतोऽ
न्यदोदयीपाभिधयोगिनायकः ।
कृतस्थितिः पत्तनगुङ्डीसर-
स्यनेकमन्त्रादिसमृद्धिमन्दिरम् ॥ ६ ॥

हरन् गरान् स्थावरजङ्गमानयं
जलानलव्यालहरीममीहरः ।
अनागतातीतविदद्भुतारपदं

नृपेभ्यमन्त्र्याद्यखिलप्रजार्चितः ॥७॥
निरीक्ष्य दूरादपि यानरियूतो
मुदाशु दण्डव्रतकृत् सहानुगैः ।
अवन्दत व्यञ्जितभक्तिडम्बरः
प्रजासमक्षं यदुयात्सुवनगुरून् ॥ ८ ॥
सङ्घाधिपनरियाद्यैः
पृष्टो नमनादिहेतुमाख्यच्च ।
गुररादिदेश दिव्य-
ज्ञानर्द्धिः कणयरीपामाम् ॥ ९ ॥
पद्माख्यदण्डपरिकर-
चिह्नैरुपलक्ष्यसूरयो वन्द्याः ।
भवता युगप्रधानाः
शिवदा इत्यादि तद्वचनमम् ॥१०॥
धाराभिधश्रावकपुङ्गवेन
एकोपवासैर्वशितः सुपर्वा ।
प्रपृच्छय सीमन्धरसार्वमाख्यत्
त्रिभिर्भवैर्मुक्तिपदं हि येषाम् ॥ ११ ॥

सारङ्गमन्त्री वटपद्रवासभाक्
द्विपन् जिनोक्तीरपि पूर्वजक्रमात् ।
निबुध्य देवस्य गिरा युगोत्तमा-
नभिग्रहात् सिद्धपुरे ऽभिगम्ययान् ॥१२॥
वेदादिशास्त्रैः कृतनैकनोदनः
समस्तयैर्यद्वचनामृतैर्मुदा ।
विधूय मिथ्यात्वगरं नतिस्तुतीः
सृजन् प्रबुद्धो जिनधर्ममग्रहीत् ॥१३॥
महाधनः श्राद्धवरः प्रभावकः
*सुदर्शनाणुव्रतभृत्सुशास्त्रवित् ।
दिने चतुष्पात्सुकृद्धमयोजन-
व्रतोऽस्ति नानाद्भुतपुण्यकर्मठः ॥ १४ ॥
गुणर्द्धिसंवादिमुपर्वभाषिने-
र्यानि तेष्वेव युगप्रधाननाम् ।
निश्चित्य युक्तं गुरुधीनिवेदनं-
शिवाय विज्ञैरधुना प्रकल्पते ॥ १५ ॥

---

* सद्दर्शनस्थैर्यभृतो जगति वीक्ष्यानित्यासि पाठः ।

देशानां खलु सुन्दरो गुरुरिमामारधाय नव्यां तनूं
दृष्ट्वा शासनमर्दितं कुकलिना तच्चिन्तकेन्द्रार्थितः।
अर्हद्भक्ततयात्र तत्सुखयितुं गच्छे ऽवतीर्णस्तपा
संज्ञे तत्किल देवसुन्दरगुरुख्याह्वापि तेष्वित्यसौ ॥१६॥

विद्याभरो ऽसंख्यमुनीन्द्रवृन्दै-
निपीयमानोऽपि हि वर्द्धमानः।
कथं तुलां यातु पयोधिनैषां
निःशेषमेकोऽपि पपौ मुनिर्यम् ॥ १७ ॥

तेषां श्रीपदपद्मपाथोधिरूर्म्युल्लासितशीकरान्।
पिबन्ति गुरुशुक्लास्तवकिल्लैतेऽपि पण्डिताः ॥१८॥

सर्वतः प्रसरमाशु यशांसि
क्षीरनीरनिधयन्ति यमिनाम्।
तानि तत्र परसूरिततीनां
शीकरावलिरिवाथ विभान्ति ॥ १९ ॥

तेषां परेषामथ सूरिराजां
चिकीर्षिता विश्वकृता यशांसि।
उन्मानवीजानि विचिक्रिरे प्राक्

पूर्णेन्दुबिम्बं किल तारकाश्च ॥ २० ॥
उत्कल्लोलैर्द्विरदरदनच्छेदकुन्दावदातैः
शुक्लाद्वैतं त्रिजगति गमिते तैर्यशोभिः प्रभूयं ।
अन्येषां चेद्धरिवृतति तदा तल्लवानेव लभ्याः
सत्ता यस्माद्विरमति सरितां सिन्धुना सङ्गतानाम्॥२१॥

को वेदयिष्यत्तुलना मतीतान्
श्रीगौतमादीन् गणिनो व्यतीतान् ।
युगोत्तमास्ते यदि नामविष्यन्
निदर्शयन्तः स्वगुणश्रिया तान् ॥ २२ ॥
वीरेण ये शासनधारका महा-
चार्याः स्वनिर्वाणपदादनूदिताः ।
एते ऽप्यगम्याः खलु ते गुणोच्चयै-
राशैतदीयैव शिवाय तत्कृता ॥ २३ ॥
नालं यस्या हि नेता
दृगगिरिमलः कर्णिकाचन्चयन्धु-
मांचद्दिगृदन्तिदन्ता-
दलतातिरतुल्या पूर्णचन्द्रश्च कोशः ।

ज्योत्स्नापूरः परागः
सितकरकिरणाः केसरालीव भाति
स्फीतं तत्तद्यशोऽब्जं
त्रिभुवनसरसि व्योमभृङ्गानुषङ्गि ॥ २४ ॥
न विद्यया नैव तपोभिरग्रिमै-
र्नवा महिम्ना न च भाग्यसम्पदा ।
गुणर्द्धिभिर्वाप्यधिकः समोऽथवा
न कोऽपि तेषामधुनेह वीक्ष्यते ॥ २५ ॥
तदीयपट्टे गुरवो जयन्ति ये
ये चापुरिन्द्रातिथितां विधेर्वशात् ।
तन्नामसङ्कीर्त्तनपुण्यवारिभि-
र्गिरं पवित्रां विदधे ऽधुना मुदा ॥ २६ ॥
श्रीज्ञानसागरगुरुप्रभवो ५१ बभूवु-
राद्या यदीक्षकबुधा इति चिन्तयन्ति ।
मुक्तोऽपि गौतमगुरुः समवातरत्त्वं
वीक्ष्यान्वयं सुगतवत्किलदुःस्थमेषः ॥२७॥
अन्तः साम्यसुधाहृदप्रसृमराः किं प्रोच्चवीचीचया

हेलापीतजिनागमाम्बुधिसुतः प्रोद्गारमालाः किमु।
किं वा वक्त्रसुधाद्युतेर्द्युतिभराः पीयूषदिग्धाः सता-
मेवं स्मोदयते विकल्पनिकरो यद्देशनागीर्भरो॥२८॥

संमील्याखिलसाम्यकाम्यकणकान्
विश्वस्य किं योगिनां
सारान् कांश्चन् वा निचित्य जगतां
पीयूषवीचीकणान्।
सर्वद्वीपसुधांशुमण्डलमिलव
सौम्यत्वलक्ष्मीलवान्
किं वादाय विनिर्मिते यमिति यन्-
मूर्त्तिर्बुधैस्तर्किता ॥ २९ ॥

शरणं समसूरिसम्पदां हरणं
कल्मषसंहतेस्सताम्।
धरणं खलु निर्वृतिश्रियां
न मुदे कस्य यदीयदर्शनम् ॥ ३० ॥

असमा जगति श्रुतश्रियो
न पथे संयमशुद्धता गिराम्।

समतीतनुल्या च शोम्यते-
स्तभवन्ते जगदुत्तम गुणैः ॥ ३१ ॥

किं मूर्ति नयमः श्रितो स्मरपतिः किमन्ततस्यश्रियां
कोशाः किं गुणसम्पदामिति मुधा चन्द्रपुतां किं निधिः।
जीवातुः कलिविदिपा प्रतिहतः श्रीजैनधर्मस्य किं
दुर्गः किं भवभीतजन्तुनिवहस्येत्यूहितास्ते बुधैः॥३२॥

न ग्रामे न पुरे तनौ न न मुनौ तेषां मनो बन्धभाक्
शय्यासनपानकादिनितरां तैः शुद्धमेवाहृतम् ।
धातुर्यैरपरमाग्रधारि भुवनोत्कृष्टा न चैतन्मदः
तत्त्वं तेन यदाम्यहो जिनमतस्याऽनूपमास्ते ऽभवन्३३

धन्यो धनः सङ्घपतिः पदोत्सवान्
श्रीस्तम्भतीर्थे विविधाद्भुतप्रथम् ।
तेषां महोस्तम्भनकेशपार्श्व-
पार्श्वे महाराजबलाद्यचीकरत् ॥ ३४ ॥

ते लेभिरे जन्ममनुप्रमाऽब्दशतेषु
यातेष्वधिकेषु बाणैः१४०५ हयेन्दुभिः १४१७
संयममिन्दुवेदैः १४४१ पदं

खतर्कैस्त्रिदिवं १४६० च तुर्यम् ॥ ३५ ॥

स्वमायुरन्ते स्वयमाकलय्य ते
  मिपिध्यभक्तं बहुसङ्घसाक्षिकम् ।
संवर्मितां साम्यसुधारसोर्मिभि-
  र्योगिमुद्रां विशदां दधुस्तदा ॥ ३६ ॥

यच्छ्वासकासौ च कफान्वितौ द्रुतं
व्यनेशतां कोटिगयोगविद्रुतौ ।
तेषां हि गम्या तदनुत्तरागतिः
संवादमात्रं त्रिदशोत्त्यः पुनः ॥ ३७ ॥

ताश्चेमाः ।

खरतरपक्षश्राद्धो
  मन्त्रिवरो गोवलः सकलरात्रिम् ।
अनदानसिद्धौ भक्त्या
  गुरुकर्पूरादिभोगकरः ॥ ३८ ॥

ईषन्निद्रामाप्या-
  पश्यत्स्वप्ने सुदिव्यरूपधरान् ।
तानिति वदतस्तुर्ये

पश्चेभ्यः शासनमविनयाः ॥ ३९ ॥

॥ युग्मम् ॥

श्रीगुणरत्नगुरून् ये
स्वप्ने रत्नराजरूपिणो दृष्टाः ।
शिष्याशिष्टविशेषा-
दुपलम्भं लम्भयामासुः ॥ ४० ॥
नैमित्तिको ऽपि धीरो
पञ्चचतुर्वत्सरिन्द्रसमविभवात् ।
तदनुपरगतिलाभाद्
युगोत्तमांस्तान् विनिश्चिनुमः ॥ ४१ ॥
तेषां निष्णातैर्भुवमुत्तमैर्गुणैः
सताग्रपूर्णानि मनोरथाहो तथा
यथात्र केषामपि तेषु ते ऽधुनाऽ
वकाश मायात्यणुरूपिणोऽपि न ॥ ४२ ॥
तेषां गुणानामचिरस्य चायुषः
प्रमोदखेदाश्रुभरः स्मृतेर्मम ।
यः स्यात्समं सैषनिदानभेदतः.

कार्ये भिदैकान्तमतं निरस्यति ॥ ४३

विधेर्जराविक्लवताखलायितं
कलेर्मुवोभाग्यविपर्ययोऽथवा ।
पूतीवुभूषा त्रिदिवस्य वाभज-
त्रिदानतामत्र चिरं तदस्थितौ ॥ ४४

श्रीसोमसुन्दरगुरुप्रमुखात्तदीयं
त्रैवेद्यसागरमगाधमिहावगाह्य ।
प्राप्योत्तरार्थमणिराशिमनर्घ्यलक्ष्मी-
लीलापदं प्रदधते पुरुषोत्तमत्वम् ॥ ४५ ॥

न स्थैर्यं सुमनः पथे प्रविदधच्चैवापि वर्णोज्ज्वलः
प्रोच्चश्चापलउल्लसज्जडतया यो निम्नगोल्लासकृत् ।
यद्गर्जत्यपि मादृशो जलदवत्सोच्चैः पदं संश्रितः
तत्त्रैवेद्यमहाब्धिशीकरकणादानस्य तज्जृम्भितम्॥४

सारस्वते प्रवाहे
तेषां शोषंगते ऽधुना कालात् ।
दीप्यैरुपक्रियन्ते
विद्याम्भः कूपकैष्टीका: ॥ ४७ ॥

चश्चज्ज्ञानादिसम्पत्पदवीं भजन्ते ॥५२॥

मेदपाटपतिलक्षभूमि-
भृद्दत्यदेवकुलपाटके पुरे ।
मेघवीसलसकेह्लहेमसञ्ज्ञी-
मनिम्बकटुकाद्युपासकैः ॥ ५३ ॥
श्रीतपागुरुगुरुत्वबुद्धिभिः
कारितं तदुपदेशसंश्रुतैः ।
तैः प्रतिष्ठितमयाऽऽदिमार्हतो
मन्दिरं हरनगोपमं श्रिया ॥ ५४ ॥
॥ युग्मम् ॥

कान्ता या गणिसंपदो गणभृतस्तत्पूर्वजस्या ऽमयं
स्तस्मिन् सिद्धिमिते सतीव्रतजुषो या नो कमप्यस्पृशन्
ता योगातिजरा बलाज्जगृहिरे तैः कीर्त्तिकन्याश्चतद्
संयोगे जनितास्तयापि चरितं तेषामहो श्लाघ्यते५५
किंचिच्छान्तमपि प्रमाणपठनैर्जाड्यं पुराद्यादिनां
भैषज्यैरिव लब्धलब्धविपक्षवादे पुनः प्रास्फुरत् ।
नव्यास्त्वेष्विव तेषु दुर्द्धरतरस्याद्वादगर्जारवं

वर्षत्स्वासमहोन्नतिष्वनुपमोपन्यासपूरामृतम् ॥५६॥
पीत्वा विनाशिताम्भोधिं पीताब्धिं कः प्रशंसति ।
पीतस्याब्धेर्न यस्याऽस्थादुदरे बिन्दुरप्यहो ॥ ५७ ॥
चन्द्रशेखरसूरीणां ज्ञानाब्धिस्तैस्त्वशेषतः ।
पीत्वा हृदि धृतः सर्वः स्वादुर्दत्तो ऽप्यवर्द्धत ॥५८॥
॥ युग्मम् ॥
स्त्रीपुंसाद्याकृतिभिरुदिते बाह्यरूपैरविद्या-
शक्त्या भातैस्तदपगमतश्चिन्मयैकात्मलीनम् ।
सत्तामात्रं न यदुपगतं सत्त्वतोऽस्मिन् विवर्त्ते
चित्रं तेषां तदपि विषयग्रामयत्नं कथं स्यात् ॥५९॥
साम्यारामे स्थिरतरलयात्सर्वदोन्मीलदेका-
नन्दास्वादेऽपसृतसकलोपाधिजन्याकुलत्वे ।
शान्त्याश्लेषप्रणयिनि यदात्मन्युदेतीह सौख्यं
रम्भाभोगोद्भवमिव हरिस्तत्तएवान्वभूवन् ॥ ६० ॥
मूलग्रन्थचतुर्दिक्षुशासनौकार्यदीपिकाः ।
दीपिका इव राजन्ते तत्प्रणीताऽवचूर्णयः ॥६१॥
तत्कृतिवेला जल्पति पीतत्रैवेद्यवार्द्धिगाम्भीर्यम् ।

मृगुपुरघोघातीर्थस्तोत्रमुखा विहितचित्तमुखा॥६२॥

ते सत्पदोन्नतिभृतः सुगभीरघोषाः
निर्वापिताखिलजनाऽघनिदाघतापाः।
प्राप्ता घनागमरमाममृतं ददाना
घोस्या भवन्तु भुवि मङ्गलवल्लिपुष्पैः॥६३॥

सूरीश्वराः श्रीकुलमण्डनाह्वा-
स्तेषां विनेया अभवन् द्वितीयाः।
भाग्यं यदीयं पुनरद्वितीयं
ख्यातं यशश्च त्रितयेऽपि लोके॥ ६४ ॥

संविच्चिरेव सततं हृदि वावसीति
नो ऽसंवृतिस्तु लभते ऽपि पदप्रवेशम्।
क्रुद्धेति साऽऽप्य परवादिततीर्विरुद्धा-
स्तेषां जघान किल जल्पजकेलिशर्म॥६५॥

तदीयचातुर्यरमावलोककैः
सम्भाव्यते ऽपीन्द्रगुरोः स्म मूर्खिमा।
शोश्रीयते गोष्पदतां यतः सरो
महाम्बुराशेः पुरतो ऽपि मानसम्॥ ६६ ॥

उभावेतौ गुरू यातौ नेत्रेतु चरणश्रियः ।
स्खलल्लेपा ततः सम्प्रत्यतिचारैः समेष्वपि ॥७३॥

तेषां च सूरिगुणरत्नसमन्वितानां
श्रीस्तम्भतीर्थनगरालिगसद्दसलाम् ।
सौवर्णिको लषमसिंह इति प्रसिद्ध-
श्चक्रे पदोत्सवततीर्वरसङ्घनेता ॥ ७४ ॥

गुरूत्तमाः श्रीकुलमण्डनास्ते
प्रख्याततेजः प्रचयप्रभावाः ।
जगत्पवित्रीकरणाभिधाना-
स्तन्वन्तु मङ्गल्यसुखानि सङ्घे ॥ ७५ ॥

देवसुन्दरगुरुक्रमपद्मोपास्ति-
विस्तृतसमस्तगुणा ये ।
तद्विनेयवृषभा विजयन्ते
कीर्त्तयामि ततकीर्त्तिततींस्तान् ॥७६॥

आद्या जयन्ति गुणरत्नमुनीन्द्रचन्द्राः
सूरीश्वराः सुगुणरत्नविभूषणैर्यैः ।
सा काप्यवापि सुभगत्वरमा यया तान्

तदाततत्कणाः शिष्याः यद्वशीकुर्वते जगत् ॥८२॥
सर्वव्याकरणावदातहृदयाः साहित्यसत्यार्णवो
गम्भीरागमदुग्धसिन्धुलहरीपानैकपीताध्वयः ।
ज्यायोज्योतिषनिस्तुषाः प्रदधतस्तर्केषु चाचार्यकं
वादे तेऽत्र जयन्त्यशेषविदुषां त्रैवैद्यदर्पोन्मलान्॥८३॥
उत्कल्लोलं दिशि दिशि बुधाः कर्णपात्रैः पिबन्तः
स्फीतं गीतं सुकृतिततिभिस्तद्यशःक्षीरपूरम् ।
तेषां शुद्धां चरणकमलां बिभ्रतां श्रीगुरूणां
सृष्टया स्रष्टा जगदुपकृतं मन्वते सांप्रतं वै ॥८४॥
परमेष्ठिमन्त्रतत्त्वाम्नायस्मरणेन दैवतादेशैः ।
पारत्रिकैहिकींस्ते प्रायो जानन्ति कार्यगतीः॥८५॥

स्वदर्शने वा परदर्शनेषु वा
ग्रन्थः न विद्यासु चतुर्दशस्वऽपि ।
समीक्ष्यते नैव सुदुर्गमोऽप्यहो
यत्र प्रगल्भा न तदीयशेमुषी ॥८६॥
या ज्ञानाद्युद्यमप्रौढिर्या च नित्याऽप्रमादिता ।
या चैषा स्मरणाशक्तिः साऽन्यत्र श्रूयते ऽपि न।८७।

चक्रुष्टीकाशलाकां ते षट्दर्शनसमुच्चये ।
ज्ञाननेत्राञ्जनायेव सतां तत्त्वार्थदर्शिनीम् ॥८८॥

उद्धृत्य ये व्याकरणाम्बुराशितो
विलोड्य बुद्धिप्रसरामराद्रिणा ।
शुद्धक्रियारत्नसमुच्चयं सता-
माश्चर्यभूतं विबुधालये ददुः ॥ ८९ ॥
लोकोत्तरां सच्चरणश्रियं मुदा
सदाभजन्तश्च सरस्वतीं प्रियाम् ।
दुष्कर्मदैत्यव्यथका जयन्तु ते
गुरुप्रवेकाः पुरुषोत्तमाश्चिरम् ॥ ९० ॥
॥ युग्मम् ॥

विभ्रतेऽथ नवतां जयिनः श्री-
सोमसुन्दरगुरुक्रमपद्माः ५१ ।
संस्मृता अपि विदध्युरनन्तं
शीतिमानमघतापहृतेर्ये ॥ ९१ ॥
सरस्वतीमाऽऽगमवार्द्धिसङ्गता-
मवाप्य येषां सुरसोर्मिवर्मिताम् ।

पुपूप या स्वस्थ तु सन्मनोगण-
स्त्यज्जेन्न तीर्थं प्रियमेलकं विदन् ॥९२॥
न नाममात्रादपि तु स्फुरत्प्रभै-
र्गुणप्रभावैर्नरसिंह एव सः ।
महोत्सवैर्यः कलिदैत्यहिंसनाद
क्षमाभृतो ऽमून् सुपदे १४५७न्यवीविशत्॥९३॥
तान् दूत्येवात्मकीर्त्त्या
विशदसुमगताख्यापनादुत्सुकत्वं
दत्ता नीता भजन्ते
सकलसुमनसां यन्मनोवृत्तिनार्यः ।
लब्ध्वागस्तद्गुरूणां
निजनुतिसमयावाङ्मुखस्यावलोकाः
क्रुद्धाः श्रोत्रद्गुणौघा
निगदितुमिव तत्कर्णपङ्क्तौ विशन्ति ॥९४॥
सौभाग्यतस्तेऽप्यधिका हरेः पितु-
र्वैताढ्यविद्याधरसेव्यताजुषः ।
भजन्ति धामा न परं क्षमाभृतां

यः कारयामाससकलावनृपधनाढ्यैः ।
सन्दर्शिनामृतरसा निजगौर्विनीतैः
श्रीसोमसुन्दरतया प्रथिताः गुरुणाम् ॥ ४ ॥

नानागोचरराजवल्लभतिधान्सुरस्थनापोषु यः
गौरव्येभ्यऽमृतरुप्पिकाभगि न ये ताम्यन्ति येनो मृगाः
येलत्यात्मवने रुची स परमानन्दादिद्रूपांकुरा-
स्यादी साम्यसुधाह्रदे श्रवणकृत्सुम्यंसदीयः*पुनः ॥५॥

जिनद्राक्षाम्लाम्लावयनल्लितं साम्यकलितं
गुरुस्मूर्धिमूर्धिलम्बणिमकलादोपविकला ।
अहो येषां पोषायितसुधरणं सिद्धिपरणं
विशुद्धं ते भद्रं ददतु भवतां पीयनवताम् ॥ ६ ॥

श्रीगाधुराजगुरुविस्तृतभाभरो ऽयं
श्रीगच्छमौलिरमलः समलंकरोति ।
श्रीजिनशासननृपं निहतारिवर्ग-
स्फूर्जत्प्रतापमहिमासजगत्प्रभुत्वम् ॥ ७ ॥

येऽयोल्लासिनी सद्विवेधाऽपरसागरे ।

---

* स्वयं इत्यपि पाठः ।

दूरं विक्षिपते हृप्यद्वादिनः कर्करानिव ॥ ८ ॥
आकौशलधरः काव्योप्यानैपुणधरो गुरुः ।
तेषां विद्यासु नैपुण्यादाचतुर्यमयं जगत् ॥ ९ ॥
प्रभावकाणां प्रथमः प्रसिद्धिभाग्
स सङ्घनेता प्रथमः प्रशस्यते ।
अचीकरद्योऽद्भुततत्पदोत्सवं
श्रीपत्तनेऽष्टेन्द्रियरत्नवत्सरे १४५८॥१०॥
आहेमचन्द्रात्रिदिवं विधाय
प्रभावकोत्पत्तिकथादरिद्रम् ।
सदृष्टयानुदृष्ट्या पुनरेव तेषां
जैनेश्वरं शासनमन्वकंपि ॥ ११ ॥
वर्षत्सूक्तवारिदेष्विव मुहुर्वादेषु तर्कामृतम्*
तैपूष्णैः पदसङ्गतेषु भुवि या कीर्त्तिः सरिज्जायते ।
सम्पूर्योत्तममानसानि विदुषामुन्मूल्यदर्पद्रुमान्
मिथ्यालोकदवोपशान्तिमपि सा कूलाब्धिमालिङ्गति१२
कलिन्दिकासौरभभृत्पदाम्बुजा-

---

* धर्मोपदेशामृतमिति वा पाठः ।

श्रितस्य तेषां व्यथते न मूर्त्तिमा ।
न नैशमन्धातमसं प्रगल्भते
विलेप्तुमुष्णांशुकराम्बुजं यतः ॥ १३ ॥
यतिजीतकल्पवृत्तिर्वृत्तिरिव चारित्रकल्पवृक्षस्य ।
तन्निर्मिता विजयते अतिचारचौरादिचारहरा ॥१४॥
उत्फुल्लाक्षैस्तनुलवणिमालोकनात् स्मेरचित्तै-
र्ध्योमाम्नाग्यार्पितगुणततेर्वाक्श्रुतेः प्रीतकर्णैः ।
ये मन्यन्ते विबुधनिकरैर्गौतमस्याऽवतारः
श्रेयः श्रेणीं ददतु जगते ते जयश्रीपरीताः ॥१५॥
श्रीदेवसुन्दरगुरुप्रभवो गणेशा
अप्याश्रयन्ति गुरुभिस्त्रिभिरेभिरेवम् ।
सूक्ष्मार्थबोधरतिकान्तहतिप्रगल्भै-
र्नेत्रैरिव त्रिभुवनेऽपि हि शङ्करत्वम् ॥१६॥
श्रीमद्गच्छहिमालये लवणिमोत्कल्लोलपद्मह्रद-
स्ते नूनं गुरवः सरिच्चतिरिवैतेभ्यो विनेयावली ।
उद्भूता भुवनेऽभितः प्रसमरा वादिद्रुविद्राविणी
पावित्र्यं तनुते हरत्यय मलं मिथ्यात्वतापापहा ॥१७॥

लसन्ति तेषां गणरत्नसिन्धौ
मुनीन्द्ररत्नानि महाप्रमाणि ।
क्षमाधराणामपि मौलिमाला
शोभाखिलाशासु विधीयते तैः ॥ १८

॥ तथा हि ॥

श्रीदेवशेखरगणिप्रथिताभिधानाः
श्रीवाचकावलिशिरोमुकुटायमानाः ।
तेषां विशुद्धगुणसंयममासमानाः
शिष्या जयन्ति विगलत्कलिशत्रुमानाः।
शिष्यस्तदीयोऽयमपीति मन्यते
श्रीवाचकेन्द्रप्रगुणोऽपि मादृशः ।
ग्रहप्रभोः पुत्रइति ग्रहावलौ
न पूज्यते पङ्गुरपीह किं शनिः ॥ २० ॥
अहो तेषां कराम्भोजवासानां सुप्रभावता ।
जातो यैर्मौलिगैर्योग्योप्यहकं मुनिसुन्दरः ॥ २१
श्रीश्रुतसुन्दरवाचकवर्याः श्लाघ्या न कस्य गणनिधय
यद्गीःस्पर्शोपापान्मन्ये श्वभ्रे सुधापसत् ॥ २२ ॥

जयचन्द्रवाचकैः किल जित्वा विद्यावलेन लघिमानम्।
नीता गुरुबुधशुक्राः स्थेमानं दधति न क्वापि॥ २३॥
श्रीभुवनसुन्दरा अपि वाचकवर्या न कस्य हर्षाय ।
सत्यपि येषां वाणी प्रतिचतुरं लीयते हृदये ॥२४॥
श्रीजिनसुन्दरवाचकहृदयगृहेऽदोषवैर्यविषयतया ।
विनयो गुरुभक्त्या सह विलसति निश्शङ्कमनवरतम्२५
सम्यक्परिहृतसप्ताऽधिकदशभिदऽसंयमा विशदचित्ताः।
कण्ठस्थाऽऽगमसूत्रस्फुरदर्थाः संवृतास्रवणाः ॥ २६ ॥
जयवर्मनामविबुधाः स्थविरा गच्छेशबन्धवः कस्य ।
श्लाघ्या नैतत्काला ऽनुत्तरगुणचरणकरणाढ्याः ॥२७॥

॥ युग्मम् ॥

नानाऽनार्यप्रायान् देशान् दूरेऽप्यबूबुधन् धीराः।
स्थविराश्च देवमङ्गलविबुधा गुरुगच्छकार्यकृतः॥२८॥
अन्येऽपि श्रुतसागरदेवप्रभरत्नसुन्दरा विबुधाः ।
अथ सर्वदेवखराह्वाः ख्याताः क्षेमङ्कराह्वाश्च ॥२९॥
संविग्नकमलचन्द्राः सदाश्रवा ज्ञानकीर्त्तयश्चाऽपि ।
बुधसाधुसुन्दराऽभयसुन्दरमिश्रा यशःश्रीढ्याः ॥३०॥

आनन्दवल्लभाह्वा विशदगुणाः सहजधर्मनामानः।
विबुधेन्द्रशीलकुम्भा विख्याताः शान्तिमूर्त्तिबुधाः ३१
निस्सङ्गतैकरङ्गा वनवासे सोमशेखरा लीनाः।
गुर्वादेशधुरीणा विमलादिकमूर्त्तयश्चाऽपि ॥ ३२ ॥
सर्वसमुद्राद्या अपि बहवो लुप्तान्यगणकतारकमाः।
गच्छेशार्ककरा इव दिशि २ निघ्नन्ति मोहतमः॥३३॥

पञ्चभिः कुलकम्।

प्रायो मान्ति गणेऽस्मिन्
पदान्यहो चतुरशीतिसङ्ख्यानि।
इव तावतां गणानां
सारैर्विहितानि विधिनाचैः ॥ ३४॥

गुरुविनयो गणभक्तिर्ज्ञानचरित्रादयश्च निर्द्वन्द्वाः।
आसन्महत्तरायां सुगुणाश्चारित्रचूलायाम् ॥ ३५ ॥
यस्याः समयार्थमणीविद्रूरभूमेः पुरः श्रयेद्ब्राह्मी।
आकोशलं प्रशस्या महत्तरा भुवनचूला सा ॥३६॥

प्रवचन १ धर्मकथाद्धी २
वादी ३ नैमित्तिक ४ स्तपस्वी ५ च।

विद्यावित् ६ सिद्ध ७ कवी ८
प्रभावकाश्चाष्ट तद्गच्छे ॥ ३७ ॥
तथाहि ।

आचार्योपाध्याया गणेऽत्र वादाद्यशेषलब्धिजुषः ।
प्रायोऽष्टधाऽपि सर्वे शासनमुद्भासयन्त्यभितः॥३८॥

विभागतोऽपि च ।

आचार्यादिपदस्था यतयः साध्व्यो महत्तराद्याश्च ।
श्राद्धाश्च तारतम्यात् प्रवचनकुशला विभान्त्यत्र ॥३९॥
श्रीजिनसुन्दरवाचकमतुमितशरदुदयरत्नमुन्याद्याः ।
हरिरिव भुवनान्युदरे बिभ्रत्यङ्गानि निखिलानि ॥४०॥१
सर्वपदस्थाः प्रायो यतयः श्राद्धाश्च मन्त्रिहेमाद्याः ।
धर्मकथालब्धिभृतः करन्ति जिनधर्मसाम्राज्यम् ॥४१॥२
श्रीसूरिवाचकेन्द्रैर्विद्याधनयाचकीभवद्विपणैः ।
भ्रियतेऽत्र वादलब्धिर्विबुधैर्यतिभिश्च बहुभिश्चैः॥४२॥३
संवृतसर्वास्त्रवणप्रबुद्धवरसर्ववल्लभप्रमुखाः ।
अवितथनिमित्तविज्ञा गणरक्षणदक्षिणा बहवः॥४३॥४
गुरुगच्छबालवृद्धप्रमुखमहानेककार्यनिष्णाताः ।

॥ युग्मम् ॥ ४ । ५ । ६ ॥

दुष्टाष्टष्टजकष्टपिष्टपटुभिः पक्षाष्टमाद्यैः सदा
सन्मासक्षपणादिकैश्च मुनयो घाटैर्विचित्रक्रमैः।
एकाहं मङ्कं त्र्यहं च विहितोत्सर्गादिभिर्भ्रान्तरै-
रस्मिन् शासनभासनं विदधते प्रौढैस्तपःकर्मभिः॥५८॥
सत्काव्यादिकलाकलापकुशलं संश्रुत्य येषां वचः
कारुण्यं दधते गुरौ सुमनसां प्राज्ञाः कवौ ह्यपि च।
राजन्यावलिमौलिमौलिगमणीदीप्तांह्रयः सूरय-
स्तैनैकेऽत्र विभान्ति कोविदसभालङ्कारहारोपमाः॥५९॥
प्रभावकैरेवमनुत्तरप्रभैरयं समग्रैरपि राजते गणः।
न रत्नजाति खलु सा प्रजायते रत्नाकरं या समतीत्य-
वर्तते ॥ ६० ॥

गणे भवन्त्यत्र न चैव दुर्मदा-
नहि प्रमत्ता न जडा न दोषिणः।
विदूरभूमिः किल सोपवीति वा
कदापि किं काचमणीनपि क्वचित् ॥६१॥
कस्मात् कस्माद्विनिर्गत्य हेतुभिर्विशदेतरैः।

॥ युग्मम् ॥ ४ । ५ । ६ ॥

दुष्टाष्टद्वजकष्टपिष्टपटुभिः पक्षाष्टमाद्यैः सदा
सन्मासक्षपणादिकैश्च मुनयो यात्यैर्विचित्रक्रमैः ।
एकाहे द्व्यहके त्र्यहे च विहितोत्सर्गादिभिश्चान्तरै-
रस्मिन् शासनभासनं विदधते प्रौढैस्तपःकर्मभिः॥५८॥
सत्काव्यादिकलाकलापकुशलं संश्रुत्य येषां वचः
कारुण्यं दधते गुरौ सुमनसां माद्याः कवौ ऽप्यपि च।
राजन्यावलिमौलिमौलिगमणीदीप्तांह्रयः सूरय-
स्तेनैकेऽत्र विभान्ति कोविदसभालङ्कारहारोपमाः॥५९॥
प्रभावकैरेवमनुत्तरप्रभैरयं समग्रैरपि राजते गणः ।
न रत्नजाति खलु सा प्रजायते रत्नाकरं या समतीत्य-
वर्तते ॥ ६० ॥

गणे भवन्त्यत्र न चैव दुर्मदा-
नहि प्रमत्ता न जडा न दोषिणः ।
विदूरभूमिः किल सोपवीति वा
कदापि किं काचमणीनपि क्वचित् ॥६१॥

कस्मात् कस्माद्विनिर्गत्य हेतुभिर्विशदेतरैः ।

कलौ प्रशाखा प्रतिमा बभूवुर्बहवो गणाः ॥६२॥
प्रौढावदाततोऽयं तु प्राप्तोऽप्याह्वां नवां नवां ।
श्रीसुधर्मगणाधीशादारभ्याऽखण्डसन्ततिः ॥ ६३॥
आज्ञाभङ्गान्तरायोत्थाऽनन्तसंसारनिर्भयैः ।
सामाचार्योऽपि पाश्चात्यैः प्रायः स्वैरं प्रवर्त्तिताः॥६४॥
उपधानप्रतिक्रान्तजिनार्चादिनिषेधतः ।
न्यूनिता दुःषमादोषात् प्रमत्तजनताप्रियाः ॥६५॥
यच्चत्प्रासुकमिष्टाम्बुप्रवृत्त्यादिसुखावहाः ।
वीक्ष्यन्तेऽन्यगणेष्वत्राऽऽचरणा लक्षणोज्झिताः६६।
त्रिभिर्विशेषकम् ।
या श्रीवीरसुधर्माद्यैः प्रणीतास्वाऽऽगमानुगा ।
आचीर्णा स्थविरैः कालानुरूपयतनाश्रिता ॥६७॥
सामाचारी गणेऽस्मिंस्तु शुद्धा सैवास्त्यखण्डिता ।
परपम्परागता सर्वगणान्तरगताऽधिका ॥ ६८॥
॥ युग्मम् ॥
विनयानीहताक्षन्तिनैर्ग्रन्थ्यप्रमुखा गुणाः ।
दुर्लभा ये कलौ सर्वे तेऽपीक्ष्यन्तेऽत्र निर्मलाः॥६९॥

वीक्ष्यन्ते चाऽन्यगच्छेष्वाचरणा लक्षणास्थिताः इत्यपि पाठः

अत एव मिथोधर्मस्नेहः सूरिवरादिषु ।
संविग्नेष्वाऽऽगमज्ञेषु गणवन्धोऽपि निस्समः॥७०॥
न स्वः कोऽपि परो वाऽत्र नैहिकोपक्रियापि च।
तथाप्येनं भजन्ति ज्ञाः सर्वे ज्ञानक्रियोच्चरम्॥७१॥
अयमेव तदा सेव्यो मध्यस्थैः स्वहितैषिभिः ।
उपेक्ष्य कुलगुर्वादिकदाग्रहहतान् जडान् ॥७२॥
मेयः कथं महिमवार्द्धिरयं गणेश-
श्रीदेवसुन्दरयुगोत्तमसूरिराजाम् ।
यत्र पारगाणि न चिरादपि सन्मनांसि
यानि प्रयान्ति सुरशैलशिरोऽपि वेगात् ॥७३॥
एषां प्रभावकवरा विलसन्ति गच्छे
यद्वत्तथा नहि परेष्वपि शिष्यमात्राः ।
आबद्धमौलिमुकुटा इव चक्रिपुर्या
पुंप्रकुरा अपि न कर्बटकेषु दृश्याः॥७४॥
अहो रत्नत्रयीसैषामनर्घ्या काऽपि विष्टपे ।
रत्नकोटीरपि त्यक्त्वा यत्तामाददते बुधाः॥७५॥
एषां शुद्धवचःप्रबुद्धहृदया मन्त्रीशहेमादयो

निस्सङ्गाः स्वजनादिपूज्झितगृहारम्भानवद्यक्रियाः ।
तैस्तैः स्वैश्चरितैरुदारललितैर्धर्मोपदेशामृतैः
प्रौढिं सङ्गमयन्त्यहो तदभयानन्दादिवच्छासनम् ॥७६॥
तद्वाप्तधर्मदार्ढ्यसङ्घपतिर्ल्लसूनुनाथाह्वः ।
गणधर्माऽऽधारकरः प्रभावको भाति नृपमान्यः॥७७॥
एषां नानागुणमणिनिचिते ऽपारगच्छाम्बुराशौ
दूराक्षिप्तातिचरणविलुठत्सङ्करे श्रीजयाढ्ये ।
उत्कल्लोले नवनवमहिमश्रीद्धशिष्यावदातैः
सर्वेऽप्यन्ये प्रदधति गणका कण्ठकूपोपमानम् ॥७८॥

चन्द्रलेखाच्छन्दः ।

सर्वतः प्रससरमांजि यशांसि
क्षीरनीरनिधयन्ति यमीनां ।
तानि तत्र परसूरिततीनां
शीकरावलिरिवाथ विमान्ति ॥ ७९ ॥
एषां परेषामथ सूरिराजां
चिकीर्षता विश्वकृता यशांसि ।
उन्मानबीजानि विचक्रिरे प्राक्

पूर्णेन्दुबिम्बं किल तारकाभ ॥ ८०॥
एभिः स्फीतैः शशधरकिरणक्षीरडिण्डीरगौरैः
शुभ्रीकृत्य त्रिजगति गमिते स्वर्यशोभिः प्रपूर्य ।
अन्येषां चेदरिवृततति सदा तद्गुणानैव रम्याः
सत्या यस्मादिरमति सरितां सिन्धुना सङ्गतानाम् ८१
चन्द्रलेखाच्छन्दः ।
को ऽवेदयिष्यत् तुलनामतीतान्
श्रीगौतमस्वामिमुखानतीतान् ।
युगोत्तमाभा यदि नाभविष्यन्
निदर्शयन्तः स्वगुणैरिमे तान् ॥ ८२ ॥
धीरेण ये शासनधारका महा-
चार्याः स्वनिर्वाणपदादनूदिताः ।
एतेऽवगम्याः खलु ते गुणोच्चयै-
शङ्कितर्दयैव शिवाय तत्कृता ॥ ८३ ॥
एतच्च काव्यपञ्चकं प्राक् लिखितमप्यधिकार-
सौष्ठवात् पुनरिहापि लिखितमिति ।
श्रीवीरतोऽभूद्गणराट् ससत-

त्रिंशो बृहद्गच्छपसर्वदेवः ।

तस्माज्जगच्चन्द्रगुरुस्तपाह्वा

मूलं गणेन्द्रो नवमभ४५ जज्ञे ॥ ८४ ॥

तस्माज्जयन्ति गुरवो गुरवोऽत्र पट्टाः

श्रीदेवसुन्दरगणप्रभवोऽ ५० ऽधुनेमे ।

स्युर्द्वादश१२श्च निखिलानधिकृत्यसूरी-

नेभ्योऽपि पञ्चकिलसप्तदशेति सर्वे ॥ ८५ ॥

एवं श्रीवीरजिनात् सन्ततिकृद्गच्छनाथगुरुगणने

एते स्युः पञ्चाशा५०आसन बहवोऽन्तराले च ॥८६॥

*त्रिपञ्चाशचतुष्पञ्चाशत्राथपि भजन्त्विमे*

श्रीसम्भूतजयानन्दादिगणेशाक्रमाश्रयात् ॥ ८७ ॥

*विश्वातिशायिमहिमाम्बुधयो जयन्तु*

*श्रीदेवसुन्दरयुगप्रवराभिराय ।*

*श्रीशासनोद्धरणधीरतमाः क्रियासुः*

*श्रेयःश्रियं सुविपुलां विपुलाङ्गभाजाम् ॥८८॥*

*श्रीवीरतीर्थकमले प्रवचनमातृप्रभुद्दलकलिते ।*

*संघपुंगनघानैः प्रकाशिने महिमसौरभ्ये ॥ ८९ ॥*

शाखास्तुतेयं बृहती मयेति ।
किञ्चिच्च लघ्वी सकला अपीमाः
श्रीवीरमार्गानुगमा जयन्तु ॥ ९५॥

मूलं यस्य जिनेश्वरो गणभृतां स्कन्धोपमं मण्डलम्
शाखाः सन्ततयस्ततश्च यतीनां साध्व्यः प्रशाखाः पुनः।
श्राद्धाः पत्रगणाश्च मञ्जरितुलारूढाश्च सुश्राविकाः
सर्वाभीष्टफलप्रदः स जयति श्रीसङ्घकल्पद्रुमः॥४९६॥

इति श्रीयुगप्रधानावतारश्रीमत्तपागच्छाधिराजपुरन्दर-
गच्छनायकपूज्याराध्यपरमाप्ततमगुरुश्रीदेवसुन्दरसूरिगण
राशिमार्गिमार्गानुगामिन्या तद्विनेयश्रीमुनिसुन्दरगणि-
हृदयहिमवद्वनीर्णश्रीगुरुभक्तिरसमहाद्रहप्रभवायां श्रीमत्ता
पर्वाधिराजश्रीपर्युषणापर्वविशिष्टविदग्धतरङ्गिण्यां तृतीये श्री
गुरुवर्णनस्रोतसि गुर्वावलीनाम्नि महाह्रदे ऽनभिव्यक्तगणना
प्रकरविस्तरह्रदः ॥

सम्पूर्णश्चायं श्रीगुर्वावलीनामा महाह्रदः ।
इति बृहत्तपागच्छश्रीगुर्वावली कृतिः श्रीमुनिसुन्दरसूरिकृता॥

---

